Postal Regd.No. GAMC- 1553/2022-2024
ISSN 2454-6313

संस्कृत-
# साम्प्रतम्
(Sampratam means "Current")

(संस्कृतमासिकी पत्रिका)
वर्ष : १८ अङ्क : २१५
मार्च - २०२४

EKLAVYA SANSKRIT ACADEMY

Registered under RNI No. GUJMUL/2006/17235. Published on 5th of every month. Permitted to post at Ahmedabad PSO on 7th of every month under Postal Regd.No. GAMC- 1553/2022-2024 issued by SSP Ahmedabad. Valid upto 31-12-2024. containing 8 pages ₹ 10

## चिन्तनम्

सतीशः गज्जर्

### मूढतायाः ऑलम्पिकक्रीडा

अस्माकं समाजे बाह्यं परिवर्तनं महत् वैचित्र्यम् आवहति। क्वचित् वस्त्रस्य स्थाने वल्कलम् उपविशति। भवनस्य स्थाने कुटिरं तिष्ठति। आहारः खलु देवभोगः उच्यते। जलस्य परिवर्तनं चरणामृतरूपेण भवति। पादरक्षा पादुकायाः शोभां प्राप्नोति। विनीतस्य केशपाशस्य स्थाने जटायाः आविष्कारः भवति। आदरस्य स्थाने अन्धानुकरणं पदं करोति। ... तदा सामान्यः मनुष्यः अपि भगवान् भूत्वा मूढजनान् यथेच्छं वञ्चयते। चरणस्पर्शेन नितराम् अतुष्टाः भक्ताः तस्य चरणाम्बु नेत्रे निमील्य पिबन्ति। कोऽपि पुरुषसिंहः तान् मूढान् ततः वारयितुं न शक्नोति। एतादृशी मूढतायाः ऑलम्पिकक्रीडा अत्र तत्र सातत्येन प्रवर्तते। बहुवारं चन्द्रं प्रति पश्यन् चतुरः मानवः पादतले विद्यमानां पृथ्वीं विस्मरति।

वस्तुतः श्रद्धा काचित् प्रोन्नता आध्यात्मिकी अवस्था वर्तते। परन्तु तस्याः तेजोमयं रूपं कपटतापसाः दूषितवन्तः। बर्ट्रॉण्डः रसेलः नास्तिकः आसीत्। ईश्वरे तस्य श्रद्धा न आसीत्। परन्तु मानवतां प्रति पूर्णतः आदरः आसीत्। ईश्वरे श्रद्धा भवेत्, वा न वा, तेन समाजस्य कापि हानिः नास्ति। परन्तु अज्ञानां मनुष्याणां कपटमत्या कृता वञ्चना महतीं हानिं जनयति।

विनोबा भावे ऋजुहृदयः महात्मा आसीत्। कदाचित् कश्चित् मूढजनः तस्य चरणाम्बु पातुम् उत्सुकः अभवत्। महात्मा स्पष्टं प्रत्याख्यानम् (अस्वीकारम्) कृतवान्। परन्तु प्रसक्तः सः मूर्खः स्वहठात् नैव निवृत्तः। महात्मा अन्ते उपायं कृतवान्। सः तस्मै हठपुरुषाय, नातिदूरे वहन्तीं नदीं प्रदर्श्य सूचितवान् – 'भवान् तस्याः नद्याः जलं पिबतु, यतो हि अहं तस्यां नद्यां बहुवारं स्नानं कृतवान्। ततः भवान् मच्चरणाम्बुपानपुण्यं सद्यः प्राप्स्यति।' कथा अत्र समाप्तिं न गच्छति। तदानीं महात्मा उत्तमेन उपायेन स्वधर्मं रक्षितवान्। परन्तु अतीते काले विनोबावर्यस्य शिष्या तत् कार्यं कर्तुं न शक्तवती। सा तु सर्वान् धर्मान् परित्यज्य स्वकीयं चरणाम्बु पायितवती एव!

श्रेष्ठं मनुष्यं प्रति विहितः आदरः शोभते। पूजा न शोभते। विवेकयुक्तः आदरः मनुष्यम् ऊर्ध्वं नयति, विवेकशून्या पूजा अधः पातयति। महात्मा गान्धी वदति – 'व्यक्तिपूजा त्यक्तव्या, गुणपूजा कर्तव्या।'

## पञ्जरस्थः शुकः

श्रीनिधिः



रामचन्द्रः कृष्णपुरस्य भूस्वामिनः निकटे कार्यं करोति स्म। सः पत्न्या जानक्या, द्वाभ्याम् अपत्याभ्यां च सह सुखमयं जीवनं करोति स्म। पुत्रः मुरलिः एकादशवर्षीयः, पुत्री च दशवर्षीया। तयोः अतीव वात्सल्यवान् सः सायं कार्यात् विरम्य गृहं प्रति आगमनावसरे मिष्टान्नं क्रीडनार्थं पाञ्चालिकां वा आनयति स्म।

कदाचित् सः सकुटुम्बं श्वशुरगृहं गतवान्। तत्र प्रतिवर्षं किञ्चन महापर्व आचर्यते स्म। तदवसरे भागग्रहणाय तत्र गमनं भवति स्म रामचन्द्रस्य नियततया। मध्येमार्गं ते सर्वेऽपि विश्रान्त्यर्थम् आम्रोद्याने उपविष्टवन्तः। तदा तत्रत्यस्य पक्षिसमूहस्य किलकिलरवेण बालौ नितरां मुग्धौ अभवताम्। तस्य कलरवम् इष्टवन्तौ तौ। ततः ते अग्रे गत्वा विपणिं प्रविष्टवन्तः। तदा मुरलिः कञ्चन शुकं ज्योतिषिकं च अपश्यत्। ज्योतिषिकस्य कथनमात्रेण सः शुकः पञ्जरात् बहिः आगत्य पत्रमेकम् उत्थाप्य तस्य हस्ते स्थापयति स्म। अनन्तरं तेन दत्तं बीजपूरं गृहीत्वा तूष्णीं पञ्जरं प्रविशति स्म। एतत् दृश्यं मुरलये नितराम् अरोचत। तादृशम् एकं शुकं दापयतु इति पितरं सानुरोधम् अपीडयत् सः।

"पुत्र! शुकः कश्चन स्वतन्त्रः पक्षी। पञ्जरे तस्य बन्धनम् अनुचितम् एव। तस्य स्वातन्त्र्यहरणं शोभावहं न" इति बहुधा तं समाश्वासयितुं प्रयत्नं कृतवान्। तथापि मुरलौ न कश्चित् परिणामः अलक्ष्यत। तस्य पीडा पराकाष्ठां गता। अतः कश्चन शुकः क्रेतव्यः एव अभवत् रामचन्द्रेण। सुन्दरे पञ्जरे तं शुकं बद्ध्वा आदिनं तेन सह क्रीडति स्म मुरलिः।

कदाचित् मुरलिः ज्वरपीडितः अभवत्। दिनत्रयं यावत् उत्थातुम् अपि अशक्तः सः मञ्चे एव शयितः आसीत्। तस्य परीक्षणं कृतवता वैद्येन उक्तम् – "एषः कश्चन विषमज्वरः। प्रतिदिनम् औषधं सेवनीयं नियततया। सप्ताहद्वयं सम्पूर्णा विश्रान्तिः स्वीकरणीया। तदवसरे एतेन मञ्चात् न अवतरणीयम् अपि। सूचना उपेक्ष्यते चेत् ज्वरः अधिकः भवेत्। ततः दीर्घकालं यावत् कष्टम् अनुभोक्तव्यं भवेत्" इति। एतेन कारणेन सप्ताहद्वयं मञ्चे एव शयितः आसीत् मुरलिः। औषध-स्वीकरणम् आदिनं शयनं च महते क्लेशाय भवति स्म। हस्तपादादीनां बन्धनं कृतम् इव अनुभवं प्राप्नोति स्म सः। क्रमशः ज्वरः उपशान्तः। तथापि तस्य बहिः गमनं क्रीडनं वा मातापितरौ न

अनुमन्येते स्म। आनन्देन क्रीडतः बालान् वातायनात् एव पश्यति स्म सः। अस्य तु क्रीडनेच्छा महती आसीत्। तथापि वराकः अनन्यगतिकः सः विवशतां धिक्कुर्वन् अश्रूणि मुञ्चति स्म। तेन पालितः शुकः पञ्जरे एव तिष्ठन् मात्रा दत्तं धान्यं खादन् अन्तः एव इतस्ततः भ्रमति स्म। सः शुकः सन्तुष्टः न अभासत। विवशताम् आप्तवतः शुकस्य स्थितिः अपि दुःखदायिनी आसीत्।

मुरलेः स्वास्थ्यम् इदानीं समीचीनं जातम्। वैद्यः तम् अवदत् – ''भवान् बहिर्गत्वा भ्रमणं क्रीडनं च कर्तुम् अर्हति'' इति। माता तस्मिन् दिने उष्णजलेन तं स्नापयित्वा, वस्त्राणि च धारयित्वा उक्तवती – ''गच्छ। मित्रैः सह क्रीड'' इति। मुरलिः पञ्जरं गृहीत्वा अङ्गणम् आगत्य पञ्जरस्य द्वारम् उद्घाट्य उक्तवान् – ''पक्षं यावत् इतस्ततः कम्पनं विना मञ्चे शयितः आसम्। मम तु तत् कारागारदण्डनम् एव आसीत्। ततः मया ज्ञातं यत् बन्धनेन कियत् कष्टं भवेत्। भवतः विषये मया अनुचितः व्यवहारः कृतः। इदानीं गच्छ। पूर्णस्वतन्त्रः सन् यथेच्छं डयस्व'' इति।

सः शुकः कलरवं कुर्वन् ततः उड्डीय गतवान्। तस्य मुखे आनन्दः विलसति स्म।

## स्वर्गः नरकः च

कस्मिंश्चित् वने जीर्णे देवालये कश्चन मुनिः ध्याने मग्नः आसीत्। कदाचित् तत्र आगतः कश्चन सैनिकः एतं मुनिं दृष्ट्वा अश्वात् अवतीर्य मुनेः पुरतः स्थितः। कश्चन समयः गतः। मुनिः ध्यानात् बहिः आगतः। तदा तत्र स्थितः सैनिकः सविनयं तं प्रणम्य उक्तवान् – ''आर्य! बहुभ्यः दिनेभ्यः कश्चन सन्देहः मां बाधते'' इति।

''तं पृच्छतु तावत्'' इति मुनिः शान्तमनस्कः सन् उक्तवान्।

''स्वर्गनरकौ स्तः इति जनैः तु कथ्यते। किन्तु तयोः अस्तित्वे मम संशयः'' इति उक्तवान् सैनिकः।

तदा मुनिः – ''भवान् कः? किं करोति?'' इति प्रीत्या पृष्टवान्।

तदा सः सैनिकः गर्वेण – ''अहम् अस्य देशस्य सेनाधिपतिः'' इति उक्तवान्।

''भवादृशं मूर्खं कः सेनाधिपतिं कृतवान्?'' इति कोपेन पृष्टं मुनिना।

मुनेः वचनं सैनिके कोपम् अजनयत्। सः झटिति कोशात् खड्गं निष्कासितवान्।

तदा मुनिः हसन् – ''पश्यतु, इदानीं नरकद्वारम् उद्घाटितम्'' इति उक्तवान्।

मुनेः वचनं श्रुत्वा सेनाधिपतिः क्षणं यावत् दिग्भ्रान्तः जातः। स्वस्य खड्गं कोशे स्थापयन् सः उक्तवान् – ''मुनिवर! क्षन्तव्यः अयं जनः'' इति।

''इदानीं स्वर्गद्वारम् उद्घाटितम्। कामक्रोधमोहादयः दुर्गुणाः एव नरकस्थानानि। येषु च शान्तिः, करुणा, दया, सहिष्णुता इत्यादयः सद्गुणाः भवन्ति तेषां हृदयमेव स्वर्गः। स्वर्गः नरकः च कुत्रापि अन्तरिक्षे न स्तः। अपि तु अस्माकं हृदये एव भवतः'' इति उक्तवान् मुनिः।

''मुनिवर्य! ज्ञातं मया। अनुगृहीतः अस्मि'' इति उक्त्वा सैनिकः पुनः मुनिं नमस्कृत्य ततः प्रस्थितः। तस्य मुखभावस्य दर्शनात् ज्ञायते स्म यत् एतस्य मनसि कापि शङ्का न अवशिष्टा।

## प्रतिमानाटकम् ( ग्रन्थपरिचयः )

✍ व्योम शाहः

**अनुवर्तते**

महाकविभासप्रणीते प्रतिमानाटके एतावता अस्माभिः दृष्टं यत् – श्रीरामस्य अभिषेकार्थं सर्वेऽपि उत्सुकाः । चेट्याः हस्तयोः वल्कलं दृष्ट्वा सीता तदग्रहणस्य कारणं पृच्छति । ततः सा स्वयमेव तद् वल्कलं गृहीत्वा धरति । अकस्मात् पटहस्य ध्वनिः तूष्णीभूतः । रामः स्वकीयस्य वनं प्रति प्रस्थानं सीतायै निवेदयति । सीता लक्ष्मणः च रामम् अनुगच्छतः ।

द्वितीयाङ्कस्य प्रारम्भे विष्कम्भके प्रतिहारीकञ्चुकीयाभ्यामिदं ज्ञाप्यते यद् रामस्य वनं प्रति गमनाद् दशरथः नितरां खिन्नः । राज्यमपि रामे गते शून्यमेव अनुभूयते इति । अङ्कस्य प्रारम्भतः भासेन स्वकीयेन वाग्जालेन दशरथस्य मनःस्थित्याः यथारूपम् इव निरूपणं कृतम् । प्रत्येकं रामलक्ष्मणवैदेहीः स स्मरति । स कथयति–

**''सूर्य इव गतो रामः सूर्यं दिवस इव लक्ष्मणोऽनुगतः ।**
**सूर्यदिवसावसाने छायेव न दृश्यते सीता ॥२/७॥''**

स क्रूरं विधिम् अपि गर्हते । कौसल्या–सुमित्रे राजानं दशरथं सान्त्वयतः । कञ्चुकीयः ततः प्रविश्य निवेदयति यत् शृङ्गिवेरपुरे रामलक्ष्मणवैदेहीः रथाद् अवतार्य सुमन्त्रः पुनरागतः । तं प्रवेशयितुं दशरथः कञ्चुकीयाय अनुमतिं प्रददाति । सुमित्रादशरथौ तं सुमन्त्रं सीतायाः रामलक्ष्मणयोः च कुशलवार्त्तां पृच्छतः । यदा सुमन्त्रः 'सर्वे' इति पदप्रयोजनेन विज्ञापनापरः तदा महाराजः तं प्रत्येकं नामग्रहेण कुशलवार्त्तां ज्ञापयितुम् आदिशति । तेषां नाममात्रग्रहणं दशरथस्य कर्णाभ्यां रसायनमिति । सुमन्त्रेण प्रोक्तं यद् रथाद् अवतीर्य अयोध्यायाः पुरतः स्थित्वा किमपि विज्ञापयितुकामाः ते अनुक्त्वा एव निर्गताः ।

**''कमप्यर्थं चिरं ध्यात्वा वक्तुं प्रस्फुरिताधराः ।**
**बाष्प-स्तम्भितकण्टत्वात् अनुक्त्वैव गता वनम् ॥२/१७॥''**

एतत् श्रुत्वा दशरथः मोहम् उपगतः । देव्यौ तं समास्वासयतः । किञ्चित् समाश्वस्य दशरथः वदति –

**''अङ्गं मे स्पृश कौसल्ये ! न त्वां पश्यामि चक्षुषा ।**
**रामं प्रति गता बुद्धिरद्याऽपि न निवर्तते ॥२/१८॥''**

कैकेयीं प्रति दशरथस्य महती खिन्नता । तद्यथा – 'राज्ये त्वाम् अभिषिच्य सन्नरपतेः लाभात् कृतार्थाः प्रजाः कृत्वा त्वत्सहजान् समानविभवान् कुर्वात्मनः सन्ततम् ।'

**इत्यादिश्य च ते तपोवनम् इतो गन्तव्यम् इत्येतया**
**कैकेय्या हि तद् अन्यथा कृतम् अहो निःशेषम् एकक्षणे ॥२/१९॥**

स कैकेयी कथयितुं सुमन्त्राय ब्रवीति–

**''गतो रामः प्रियं तेऽस्तु त्यक्तोऽहम् अपि जीवितैः ।**
**क्षिप्रम् आनीयतां पुत्रः पापं सफलमस्त्विति ॥२/२०॥ ''**

दशरथः पितॄन् स्मरति –

**''अयम् अमरपतेः सखा दिलीपो रघुः अयम् अत्रभवान् अजः पिता मे ।**
**किम् अभिगमनकारणं भवद्भिः सह वसने समयो ममाऽपि तत्र ॥२/२१॥''**

दशरथः प्राणैः त्यक्तः इति वार्त्तायां प्रसृतायां सर्वत्र हाहाकारः सञ्जातः । अनेन प्रसङ्गेन द्वितीयाङ्कस्य समाप्तिः भवति ।

( क्रमशः... )

## मासवार्त्ताः

### सम्पन्नः चतुर्दशः पदवीदानसमारम्भः




एकलव्य-संस्कृत-एकेडेमीसंस्थानस्य चतुर्दशः पदवीदानसमारम्भः फरवरीमासस्य १० दिनाङ्के सम्पन्नः। समारम्भेऽस्मिन् 'डिप्लोमा-इन-संस्कृतटिचिंग' इति अभ्यासक्रमे प्रशिक्षितेभ्यः छात्रेभ्यः डॉ. गौराङ्ग-गान्धिमहोदयस्य (Consultant, Urologist and Andrologist) करकमलाभ्यां पदवीप्रदानम् अभवत् । अभ्यासक्रमोऽयं श्रीसोमनाथ-संस्कृत-विश्वविद्यालयेन सह संलग्नः वर्तते । कार्यक्रमेऽस्मिन् श्रीभाविन् पाठकः (उपाचार्यः, त्रिपदा-इन्टरनेशनल-स्कूल) विशेषोपस्थितिं प्रायच्छत् । प्रसङ्गेऽस्मिन् एकलव्य-संस्कृत-एकेडेमीसंस्थाने आयोजितेषु विविधेषु अभ्यासक्रमेषु संस्कृतस्य अध्ययनं कृतवद्भ्यः छात्रेभ्यः अपि प्रमाणपत्रप्रदानम् अभवत्। प्रमाणपत्रं प्राप्य सर्वे छात्राः आनन्दिताः आसन्।

## कृपया हसन्तु

**पुत्री - (पितरम् उद्दिश्य) पित: ! मया रूप्यकनाणकम् एकं गीर्णम्, त्वरितं मां वैद्यसमीपं नयतु ।**

**पिता - वत्से ! अलम् उद्वेगेन । भवती तत्र नीयेत चेत् स: वैद्य: शतं रूप्यकाणि गिलेत् ।**

★ ★ ★ ★ ★

**पथिक: - (रमणम् उद्दिश्य) भो: ! एष: मार्ग: कुत्र गच्छति ?**

**रमण: - अहं पञ्चदशवर्षेभ्य: पश्यन् अस्मि । एष: मार्ग: अत्रैव अस्ति । कुत्रापि न गच्छति ।**

★ ★ ★ ★ ★

**कस्यचित् वक्तु: भाषणस्य इच्छा न आसीत् । अत: स: जनान् उद्दिश्य -**

**वक्ता - भो: ! मया अद्य यत् वक्तव्यम् अस्ति तस्मिन् विषये भवन्त: जानन्ति एव इति अहं मन्ये ।**

**श्रोतार: - आम् ! जानीम: ।**

**वक्ता - अत: अद्य मया किञ्चिदपि वक्तव्यं नास्ति ।**

**केचन - वयं न जानीम: ।**

**वक्ता - तर्हि अज्ञातृणां पुरत: मया किं वक्तव्यम् ?**

**श्रोतार: - केचन जानन्ति, केचन न जानन्ति ।**

**वक्ता - तर्हि ये खलु जानन्ति ते एव अज्ञातृन् ज्ञापयन्तु ।**

## सुभाषितम्

**– संस्कृतविकिपीडियाजालस्थानात्**

**बालस्यापि रवेः पादाः पतन्त्युपरि भूभृताम् ।**
**तेजसा सह जातानां वयः कुत्रोपजायते ॥**

**तात्पर्यम्** – प्रातःकालीनस्य बालरवेः किरणाः बृहत्पर्वतानाम् उपरि अपि पतन्ति । एवं जन्मना यः तेजस्वी भवति, तस्य प्रभावः शक्तिर्वा वयसा न निर्धार्यते । तेजस्विनः बाल्येऽपि महत्कार्यं साधयन्ति इत्यर्थः ।

**बालादपि ग्रहीतव्यं युक्तमुक्तं मनीषिभिः ।**
**रवेरविषये किं न प्रदीपस्य प्रकाशनम् ॥**

**तात्पर्यम्** – बालानां वचनं योग्यं यदि स्यात् तर्हि पण्डितैः अपि अङ्गीकरणीयमेव । सूर्यस्य प्रकाशः यत्र न प्रविशेत् तस्मिन् स्थले दीपः प्रकाशं किं न दद्यात् ?

**भये वा यदि वा वर्षे सम्प्राप्ते यो विमर्शयेत् ।**
**कृत्यं न कुरुते वेगान्न स सन्तापमाप्नुयात् ॥**

**तात्पर्यम्** – भययुक्ते सन्निवेशे भवतु, आनन्दावसरे वा भवतु, यः पूर्वापरं विमर्शयेत्, सहसा अविचिन्त्य कार्यं न कुर्यात्, तस्य दुःखं न भवेत् कदापि ।

## ज्ञानसरित्

श्यामः पटेलः

**अमेरिकादेशस्य मृत्योः दरी – ''डेथ वेली''** – पृथिव्यां जलं विहाय यावती भूमिः दृश्यते तस्याः अष्टमो भागः वन्ध्यभूम्या मरुभूम्या च आरक्षितः वर्तते। विश्वे २७ मरुभूमयः सन्ति। तासु अफ्रीकामहाद्वीपस्य सहारा नामाख्या मरुभूमिः बृहत्तमा अस्ति। तस्याः परिमाणं भारतदेशात् त्रिगुणितम् अस्ति। परन्तु अमेरिकादेशस्य केलिफोर्निया-राज्यस्य मरुभूमिः अत्युष्णत्वात् मृत्योः दरी मन्यते। सा ''डेथ वेली'' नाम्ना प्रसिद्धा दरी केवलं मरुभूमिः नास्ति। प्रत्युत २२५ किलोमीटरमिता दीर्घा तथा च २४ किलोमीटरमिता विस्तृता एका दरी अस्ति। मन्यते यत् अत्र पूर्वे एकः तडागः स्यात्। एषा दरी समुद्रतटतः २८२ फीटपरिमिता गभीरा अस्ति। दर्याः भूमिः क्षारमयी अस्ति। विश्वे सर्वाधिकः घर्मः अस्यां दर्यामेव भवति। ख्रिस्ताब्दस्य १९१७ तमे वर्षे अत्र मासद्वयं ४९ सेल्शियससमितं तापमानम् आसीत्। यद्यपि ''डेथ वेली'' इत्यस्मिन् मानवाः न निवसन्ति। परन्तु २०० यावन्तः पक्षिणः, १९ प्रजातीनां सर्पाः तथा च कृकलासाः निवासं कुर्वन्ति।

ख्रिस्ताब्दस्य १८४८ तमे वर्षे कश्चन साहसिकः दरीतः सुवर्णं प्राप्तवान्। ततः आरभ्य सुवर्णप्राप्तये अनेकेषां साहसिकानाम् आगमनम् भवति स्म। किन्तु तीव्रघर्मत्वात् प्रायः साहसिकाः मृत्युं प्राप्तवन्तः। अतः ''डेथ वेली'' इत्यस्य समीपस्थः पर्वतः ''फ्युनरल-माउन्टेन'' नाम्ना विख्यातः सञ्जातः। सम्प्रति न कोऽपि तत्र गन्तुं प्रयत्नं करोति। केवलं पर्यटकाः एतस्याः दर्याः दूरात् दर्शनं कर्तुं गच्छन्ति। अतः तत्रत्येन सर्वकारेण दरीदर्शनाय समीपस्थे पर्वते ''दान्तेझ व्यू'' नाम पर्यटनस्थानं निर्मितम् अस्ति। तत्र स्थित्वा जनाः सूर्यस्य आतपेन ज्वलन्तीं दरीं पश्यन्ति।

वन्ध्यभूमिः – infertile land, दरी – valley, कृकलासः – chameleon

## शब्दमञ्जूषा

| | | |
|---|---|---|
| **पौरः** | नागरिक | citizen |
| **रसायनम्** | रसायण | alchymy |
| **मर्कटः** | बन्दर | monkey |
| **कुलिशः** | इन्द्र का वज्र | thunderbolt of Indra |
| **अवष्टम्भः** | प्रारम्भ | commencement |
| **उपालम्भः** | उलाहना | censure |
| **औदार्यम्** | उदारता | generesity |
| **भृङ्गः** | भँवरा | bee |
| **उत्सारकः** | द्वारपाल | door keeper |
| **निविष्टः** | एकाग्र | concentrated |
| **विनिमयः** | परिदान | barter |
| **उत्पाटनम्** | उन्मूलन | uprooting |
| **दैवतम्** | दिव्य | divine |
| **वितथम्** | असत्य | false |
| **जीवितम्** | जीवन | life |

## किं भवन्तः जानन्ति ?

**१) एतेषु कः गुरुदक्षिणायां स्वकीयम् अङ्गुष्ठं दत्तवान्?**
(क) कर्णः (ख) एकलव्यः (ग) हिरण्यधनुः (घ) अनुविन्दः

**२) एतेषु कः महाभारतयुद्धे चक्रव्यूहस्य ध्वंसं कृतवान्?**
(क) इरावान् (ख) घटोत्कचः (ग) अभिमन्युः (घ) सुतसोमः

**३) एतेषु कः ऋषिः गङ्गायाः समस्तं जलम् अपिबत्?**
(क) जह्नुः (ख) दुर्वासाः (ग) परशुरामः (घ) याज्ञवल्क्यः

**४) एतेषु कः षण्मासं शेते स्म?**
(क) मेघनादः (ख) हिरण्यकशिपुः (ग) कुम्भकर्णः (घ) बकासुरः

**५) आदिशङ्कराचार्यः कस्य मतस्य प्रवर्तकः आसीत्?**
(क) द्वैत (ख) अद्वैत (ग) विशिष्टाद्वैत (घ) शुद्धाद्वैत

**६) मध्वाचार्यः कस्य मतस्य प्रवर्तकः आसीत्?**
(क) द्वैत (ख) अद्वैत (ग) शुद्धाद्वैत (घ) द्वैताद्वैत

**७) विशिष्टाद्वैतमतस्य प्रवर्तकः कः आसीत्?**
(क) रामानुजाचार्यः (ख) मध्वाचार्यः (ग) शङ्कराचार्यः (घ) वल्लभाचार्यः

उत्तराणि – (१) ख (२) ग (३) क (४) ग (५) ख (६) क (७) क

# अस्माकम् आगामिकार्यक्रमाः


"संस्कृतसाम्प्रतम्" मासिकस्य विषये पत्नक्रमाङ्कः ४ अनुगुणं विवरणम् ।

१. प्रकाशनस्थानम् - "एकलव्य-संस्कृत-एकेडेमी" कोर हाउस, ओफ सी. जी. रोड, परिमलगार्डन-समीपम्, एलिसब्रिज, अहमदाबादम् – ६.

२. प्रकाशनकालः - मासिकः

३. मुद्रकः प्रकाशकः - डो. मिहिरः उपाध्यायः
राष्ट्रियता - भारतीयः

४. सम्पादकः - डो. मिहिरः उपाध्यायः
राष्ट्रियता - भारतीयः
सङ्केतः - "एकलव्य-संस्कृत-एकेडेमी" कोर हाउस, ओफ सी. जी. रोड, परिमलगार्डन-समीपम्, एलिसब्रिज, अहमदाबादम् – ६.

५. सदस्यनाम - डो. मिहिरः उपाध्यायः , सम्पादकः
सङ्केतः - "एकलव्य-संस्कृत-एकेडेमी" कोर हाउस, ओफ सी. जी. रोड, परिमलगार्डन-समीपम्, एलिसब्रिज, अहमदाबादम् – ६.

अहं डो. मिहिरः उपाध्यायः घोषयामि यत् उपर्युक्ताः अंशाः नियमानुसारं योग्याः सन्ति।

दिनाङ्कः - ०१/०३/२०२४





**Online / Offline**

**Admission Open**

## संस्कृतभाषाशिक्षणम्

### First Level

**Date :** 01/04/24 to 28/06/24
**Day :** Mon-Wed-Fri
**Time :** 6:30pm to 8:00pm
**Fees :** 6000/-

### Second Level

**Date :** 01/04/24 to 28/06/24
**Day :** Mon-Wed-Fri
**Time :** 7:00am to 8:30am
**Fees :** 6000/-

## संस्कृत-साम्प्रतम्

नमस्कारः

यदि भवन्तः ''साम्प्रतम्'' मासिकीपत्रिकायाः ग्राहकाः भवितुम् इच्छन्ति तर्हि अधोलिखिते सङ्केते धनं प्रेषयन्तु ।

**ग्राहक शुल्कम्**

वार्षिकं रू – 100
द्वैवार्षिकं रू – 175
त्रैवार्षिकं रू – 250
अङ्कमूल्यं रू – 10

## छन्दःपरिचयः

**Date :** 11/03/24 to 03/04/24
**Day :** Wednesday-Friday
**Time :** 6:30pm to 08:00pm
**Fees :** 2500/-

**contact: Dr Mihir Upadhyay, 98246 16237**

**प्रियवाचकाः**

- **भवतां समीपे यदि पत्रिकायां प्रकाशनयोग्याः लेखाः, कथाः, हास्यकणिकाः वा सन्ति तर्हि कृपया प्रेषयन्तु ।**
- **पत्रिकायाः विषये सूचनम् अपि स्वीकार्यम् अस्ति ।**




EKLAVYA SANSKRIT ACADEMY


**Published, Printed and Edited by Dr. Mihir Upadhyay**
For. Eklavya Sanskrit Academy
Core House, Off CG Road
Ahmedabad 380 006 India
**Fax:** (91) 79 26563681
**Mobile:** (91) 98246 16237
**e-mail:** mihiresa@gmail.com
**web:** www.eklavyasanskritacademy.org

Printed at :- Print Vision Private Limited, Print Vision House, Jay Gujarat Fruit Lane, Ambawadi Market, Ahmedabad, Gujarat 380006